प्राच्यां दिशि शिरश्शस्तं याम्यायामथ वा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥

इति पद्मपुराणस्मरणात् । अत्र विशेषमाह व्यासः—

शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् ।
प्रागुदक्प्रवणे चैव संविशेत्तु सदा बुधः ॥

इति । विविक्तं रहः । गोबिलोऽपि—

स्नातस्संवेशनवेलायां वैणवं दण्डमुपानिदधाति शयनसमीपे सर्वां रात्रिं निश्चलं स्वत्स्ययनार्थम्

इति । पुराणेऽपि—

रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः ।
नमस्कृत्याव्ययं विष्णुं समाधिस्थस्स्वपेन्निशि ॥

इति । सुखशायिनो गोबिलेन दर्शिताः—

अगस्त्यो माधवश्चैव मुचुकुन्दो महाबलः ।
कपिलोमुनिरास्तीकः पञ्चैते सुखशायिनः ॥

अत्र मार्कण्डेयः—

शून्यालये श्मशाने च एको वृक्षे चतुष्पथे ।
महादेवगृहे वाऽपि मातृवेश्मनि न स्वपेत् ॥
न यक्षनागायतने स्कन्दस्यायतने तथा ।
कूलच्छायासु च तथा शर्करालोष्टपांसुषु ॥
न स्वपेच्च तथा दर्भे विना दीक्षां कथं चन ।
धान्यगोदेवविप्राणां गुरूणां च तथोपरि ॥

न चापि भिन्नशयने नाशुचौ नाशुचिस्स्वयम् ।
नार्द्रवासा न नग्रश्च नोत्तरापरमस्तकः ॥
नाकाशे सर्वतश्शून्ये न च चैत्यद्रुमे तथा ।

प्रचेता अपि—

न सन्ध्यायां शयीत न देवसमीपे न वेदसमाप्तौ नाशुचिर्न नग्नो न विशीर्णखट्वायां नान्यवर्णोपशायितयां नाश्मपीठोपहितायां न भूतयक्षग्रहायतनेषु न श्मशानवल्मीकमहावृक्षच्छायासु च,

इति । विष्णुरपि—

नार्द्रपादवासास्स्वपेन्न पलाशशयने [1] न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धे [2] नाग्निप्लुष्टे न घटासिक्तद्रुमजे न श्मशानशून्यालयदेवतायतनेषु न च पलमध्ये न नारीमध्ये न धान्यगोगुरुहुताशनसुराणामुपरि नोच्छिष्टो न दिवा.

इति । विष्णुपुराणेऽपि—

नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामाधितिष्ठेदनास्तृताम् ॥

---

[1] नोर्द्रपादस्सृप्यनोन्नराशिरः न नग्नो नाद्रेवंशे नाकाशे न पालाशे शकने—इति मुद्रितविष्णुस्मृतौ पाटः

[2] दग्ध कृते न भग्ने नाग्निप्लुष्टे—इति तत्रैव.

इति । दक्षोऽपि—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

अत्र कूर्मपुराणं—

इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान्घोरान्काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥

इति । इति स्मृतिचन्द्रिकायां शयनविधिः.

आह्निकं व्यदधाद्देवः केशवार्य सुतस्सुधीः ।
सर्वैर्वाचनिकैरर्थैरच्युतः प्रीयतामिति ॥

इति श्री सकल विद्याविशारद श्री केशवादित्य
भट्टोपाध्यायात्सुत याज्ञिक देवणभट्टोपाध्याय
विरचितायां स्मृतिचन्द्रिकायां
आह्निककाण्डः समाप्तः.



